हे तीर्थङ्कृत्, ते तव मते शासने भारती विश्ववर्यं निकाय्ये वासमाश्रयम् । मोक्षमित्यर्थः । वितीर्यात्तरामिति संबन्धः । भारती कथंभूता । परशासनध्वान्तसूर्यसमा । भूरिभङ्गैरर्थविकल्पैर्गभीरा । निकाय्ये कथंभूते । अहतिमति अविद्यमानहनने । मते शासने आधारभूते । यद्वा अहतिं अविद्यमानघातम् । एतद्वासस्य विशेषणम् । अतिमते अतिशयेनाभिप्रेते । हि स्फुटम् । ते तव । शस्यमानस्य स्तूयमानस्य । सदा नित्यम् । अतनवो बहुतरा अतीता आपदो यस्य तस्यामन्त्रणं अतन्वतीतापत् । आनन्दधानस्य प्रमोदस्थानस्य । सा इत्थंभूता । अमानिनो निरहंकारस्य । नौस्तरणिः । महति विस्तीर्णे । हे हित प्रियकारिन् । यद्वा मतिमता मनीषिणा ईहिता । ईशस्य स्वामिनः । वा इवार्थे भिन्नक्रमश्च । मानस्य पूजायाः संसद् वा सभेव । तापदानं संतापखण्डनमातन्वती । सामानि प्रियाणि दधानस्य । नोऽस्माकम् ॥

सरभसनतनाकिनारीजनोरोजपीठीलुठत्तारहारस्फुरद्रश्मिसारक्रमाम्भोरुहे
परमवसुतराङ्गजा रावसन्नाशितारातिभाराजिते भासिनी हारतारा बलक्षेमदा ।
क्षणरुचिरुचिरोरुचञ्चत्सटासंकटोत्कृष्टकण्ठोद्भटे संस्थिते भव्यलोकं त्वमम्बाम्बिके
परमव सुतरां गजारावसन्ना शितारातिभा राजिते भासिनीहारतारा-
बलक्षेऽमदा ॥ ९६ ॥

हे सवेगनतदेववधूजनस्तनपीठीषु लुठतां तारहाराणां स्फुरद्रश्मिभिः सारे कर्बुरे क्रमाम्भोरुहे चरणकमले यस्यास्तस्याः संबोधनम् । परमवसुतराङ्गजा अतिशयेन परमवसू परमतेजसौ अङ्गजौ पुत्रौ यस्याः सा । रावेण ध्वनिना सम्यग् नाशितोऽदर्शनं नीतो अरातिभारः शत्रुवर्गो यया सा । अजितेऽपराभूते । भासिनी भासनशीला । हारतारा हारोज्ज्वला । बलं क्षेमं च ददाति या । सिंहे कथंभूते । क्षणरुचिरुचिराभिर्विद्युद्दीप्तिभिरिव रुचिराभिः उर्वीभिः चञ्चन्तीभिः सटाभिः संकट उत्कृष्टो यः कण्ठस्तेनोद्भटे । हे अम्ब मातः । हे अम्बिके देवि । परमुत्कृष्टमव रक्ष । सुतरामत्यर्थम् । गजारौ सिंहे । असन्ना अखिन्ना । संस्थिता । शितस्य तनूकृतस्य आरस्येव पित्तलस्येव अतिशयेन भा यस्याः सा । राजिते भ्राजिते । भासमानहिमनक्षत्रधवले । अमदा मदरहिता । हे अम्बिके सिंहे संस्थिते सुतरां त्वं भव्यलोकमवेति संबन्धः ॥

इति श्रीमहाकविशोभनमुनिप्रणीता सावचूरिश्चतुर्विंशतिजिनस्तुतिः ।

---

